तिरुमलतिरुपतिदेवस्थानम्

# बालसप्तगिरिः

## सप्तगिरि अनुबंधम्

सम्पुटिः-०१ सञ्चिका-२

## एप्रिल्-२०२०



## विषयसूचिका



मुखचित्रम् - श्रीकोदण्डरामस्वामिनः

अन्तिमरक्षापुटः - बालाञ्जनेयः

हिन्दू देवताः

# आञ्जनेयस्य बाल्यम्

- एन्.उमादेवी



**बुद्धिर्बलं यशोधैर्यं निर्भयत्व मरोगता।**

**अजाड्यं वाक्पटुत्वं च हनुमत् स्मरणात् भवेत्।।**

उपर्युक्त श्लोकमनुसृत्य सद्बुद्धिः, शरीर बलं, मनोबलं, सत्कीर्तिः, सकलविध कर्माचरणे धैर्यं, भयराहित्यं, व्याधिराहित्यं, शरीरस्वस्थता, कार्येषु आलस्याभावः, वेदशास्त्रादीनां अध्ययने पाटवं, एते गुणाः हनुमतः स्मरणात् पूजनात् जनानां भवेयुः। श्रीमद्रामायणे आञ्जनेयस्य विशिष्टं स्थानं वर्तते। हनुमान् श्रीरामचन्द्रस्य दूतः, भक्तः, शिष्यः, सुहृत् भूत्वा सीतान्वेषणे रावणसंहारे राक्षससंहारे च बहूपकृतवान् आसीत्।




हनुमान् अंजना देव्याः पुत्रः आसीत्। अंजनादेवी केसरि नामकस्य वानरस्य भार्या अभूत्। गृहस्थाश्रमे विरक्तः केसरिः तपः कर्तुं कुत्रापि अगच्छत्। तपः आचरितुं गमनसमये केसरिः स्व भार्यां वायुदेवसकाशे परित्यक्तवान्। तस्याः भक्तिश्रद्धाभ्यां संतुष्टः वायुदेवः स्व गर्भस्थं शिव वीर्यं तस्यै दत्तवान्। तस्य प्रभावात् अंजना देवी गर्भं धृत्वा पुत्रं प्रासूत। स एव आञ्जनेयः, वायुदेव प्रसादात् संजात इति तस्य वायुपुत्र इति नामापि अभूत्।

स बालकः गुहायां उत्पन्नः मातृसकाशे दिन दिन प्रवर्धमानः आसीत्। एकस्मिन् दिने सूर्यबिम्बं फलमिति सम्भाव्य स्वीकर्तुं (ग्रसितुं) प्रायतत। तत्समये एव राहुरपि तत्रागतवान्। आञ्जनेय राहुग्रहयोः युद्धः सम्प्राप्तः, तदा वानर बालकः राहुमपि ग्रसितुं प्रयत्नं कृतवान्। राहुः भयभीतः इन्द्र सकाशं गत्वा इन्द्रं आनायितवान्। आंजनेयः इन्द्रवाहनेन ऐरावतेन युद्धमकरोत्। तदा देवेन्द्रः वानर बालं वज्रायुधेन अहत्। वानर बालकस्य हनवः वज्रायुधेन ताडितत्वात् आंजनेयस्य ''हनुमान्'' इति नाम प्रसिद्धमभूत्। स्वपुत्रस्य बाधां दृष्ट्वा वायुदेवः इन्द्र विषये कुपितः लोकसंचारं नाकरोत्। तदा समस्त देवगणाः अमुं विषयं ब्रह्मणे निवेदयामासुः। अनन्तरं ब्रह्मदेवः इतर देवैः सह वायुदेवं स्तुत्वा आञ्जनेयाय चिरञ्जीवत्वं इत्यादीन् वारन् प्रददौ।






द्वादश सूरयः

# श्रीमद्भूतयोगीतिदिव्यसूरिवैभवम्

- डा.व.सौम्यनारायणः




श्रीमदनन्तशेषादिभिः प्रमुखनित्यसूरिभिः, परमपदे श्रीमति वैकुण्ठे, निषेव्यमानः श्रियः पतिः, श्रीमन्नारायणः, आनन्दैकार्णवे भूते दिव्यमणिमण्टपे, सिंहासने, सर्वाभरणभूषितः, दिव्यायुधैश्च देदीप्यमानः, नित्य-लीलेति उभयविभूतिनिर्वाहको भूत्वा, श्रीदेवी- भूदेवी-नीळादेवीसहितः, अनन्त-गरुड-विष्वक्सेनादीन् नित्यसूरींश्च अनुगृह्णन्, दशावतारैरपि अतृप्तो भूत्वा, पुनः ''आळ्वार्गळ्'' इति विख्यातदिव्यसूरयः इति रूपैः लोकानुज्जीवयितुं सङ्कल्पसकरोत्॥ तादृशसङ्कल्पानुगुणं श्रीमदाळवार्गळ् नाम्नां दिव्यसूरीणां महाशयानामवतराणं श्रीमद्भागवतपुराणश्लोकद्वयं सूचयति -

''कलौ खल ... महानदी॥'' इति

एते च - ''भूतं सरश्च ... नित्यम्॥

इति पराशरभट्टार्यकृतेऽस्मिन् श्लोके, पोय्गैयाळ्वार्, भूतत्ताळ्वार्, पेयाळ्वार्, तिरुमळ्शैळवार्, तोण्डरडिप्पोडियाळ्वार्, कुलशेखराळ्वार्, तिरुप्पाणाळ्वार्, तिरुमङ्गैयाळ्वार्, पेरियाळ्वार्, श्रीमती आण्डाळ् नाच्चियार्, मधुरकवियाळ्वार्, नम्माळ्वार् इति नामभिः द्वादशसूरयः

इति परिगण्यन्ते। एते दिव्यसूरयः विविधसन्दर्भेषु चावतीर्य, परमात्मनि श्रीमन्नारायणे परमभक्तिपूर्णाः अभवन्। भक्त्या स्वानुभवं भगवति श्रीमन्नारायणे परमभक्ति भरितस्थितौ अप्रयासेन आगतानि वचनानि रसैकपूर्णानि भक्तिफलानि शब्दरूपेषु, एते सूरयः अन्वगृह्णन्॥

एवमेतैर्द्वादशसूरिभिः अनुगृहीताः सूक्तयः अस्मात्पूर्वाचार्येण श्रीमन्नाथमुनिना दिव्यप्रबन्ध इति नाम्ना सङ्कलिताः। तद्दिव्यप्रबन्धः चतुस्सहस्रसंख्याकः द्रमिडभाषायां नालायिरदिव्यप्रबन्ध इति कथ्यते। तत्र मुदलायिरम् उत प्रथमसहस्रे पेरियाळ्वार्, श्रीमती आण्डाळ् नाच्चियार्, तोण्डरडिप्पोडियाळ्वार्, कुलशेखराळ्वार्, तिरुप्पाणाळ्वार्, तिरुमळ्शैळवार्, मधुरकवियाळ्वार् इति दिव्यसूरीणां दिव्यसूक्तयः परिगणिताः सन्ति। इरण्डायिरम् उत द्वितीयसहस्रे तिरुमङ्गैयाळवार् सूक्तयः गण्यन्ते। मूण्ड्रायिरम् उत तृतीयसहस्रे इयर्पा इत्यपरनामके पोय्गैयाळ्वार्, भूतत्ताळ्वार्, पेयाळवार् तिरुमळ्शैळवार्, नम्माळ्वार् आदि दिव्यसूरीणां सूक्तयः गण्यन्ते। नान्गायिरम् उत चतुर्थसहस्रे, नम्मालवार् सूरेः तथा श्रीरङ्गामृतार्यस्य च सूक्तयः इति परिगणिताः वर्तन्ते।

तेषु द्वादशसु, श्रीभूतयोगी नामा मुदलाळ्वार्गळ् इति प्रख्यातेषु त्रिषु दिव्यसूरिषु चान्यतमः। अयं योगी मामल्लपुरनामनि नगरे अवतीर्णः। श्रीवैष्णवमतग्रन्थेषु नालायिरदिव्यप्रबन्धे महत्वपूर्णे ग्रन्थगुच्छे मूण्ड्रायिरमिति इयर्पा भागे ''इरण्डां तिरुवन्तादि'' इति पद्यानि अनेन योगिना अनुगृहीतानि। एतानि पद्यानि द्रमिडभाषायां वेणपा इति वृत्ते बद्धानि विलसन्ति। संसारे वृत्तं-वर्तमानंवर्तिष्यमानं विपरीतं सर्वं हे। भगवन्! दूरीकरोतु, ज्ञानदीपेन भगवतः कृपया सर्वं लोकं प्रकाशयितुमैच्छम् इति, भगवति स्वकीया भक्तिः अपरिमेया इति च अन्वग्रहीत्।





कन्नड हरिदास वरेण्याः

# कर्णाटक हरिदासाः सारस्वतं च

तेलुगु मूलम् - सुस्वरंनागराजाचार्यः
संस्कृतानुवादः - एस्. अभिक्या

## श्रीपादरायाः

बारो मनेगे गोविन्द.......

हे बालाः! श्रुतवन्तः खलु एतानि सुप्रसिद्धकीर्तनानि संगीतकार्यक्रमेषु भजनेषु च! तर्हि ज्ञानं वा एतानि सुप्रसिद्धानि गीतानि कैः विरचितानि इति? तर्हि ज्ञातव्यं खलु तेषां पुण्यपुरुषाणां विषये? न तु अन्याः, ते एव श्रीपादरायाः अथवा श्रीपादराजाः! अमीषां पूर्वाश्रमस्य नाम लक्ष्मीनारायणाचार्याः तेषां मातापितरौ ''गिरिजम्माशेषगिरि आचार्यौ स्तः। निवासस्थानं तावत् मैसूरुनगरसमीपस्थ चेन्नपट्टनग्रामः। लक्ष्मीनारायणः बाल्यावस्थायामेव बहु कुशाग्रबुद्धिवान् एवं वाक्चातुर्यवान् च आसीत्। गोवत्सादीन् पालनसमये स्वकीयकोमलमृदुमधुरस्वरेन यदा गायति स्म तदा प्रकृतिरपि परमानन्दं प्राप्नोति स्म।

एकदा बालकस्य लक्ष्मीनारायणस्य मुखतेजोकान्तिः वाक्चातुर्थं च दृष्ट्वा स्वर्णवर्णतीर्थ स्वामिपादाः तं शिष्यत्वेन अनुगृहणन्। तत्पश्चात् उपनयनसंस्कारान् कृत्वा, स्वयमेव संस्कृतकन्नड द्राविड भाषासु निष्णातान् कृत्वा, द्वैतवेदान्तग्रन्थान् च पाठयित्वा, तं उत्तमविद्वांसम् अकरोत्। तदनन्तरं तस्य दैवानुग्रहेन लब्धमेधाशक्तिं दृष्ट्वा। अवलोक्य सर्वज्ञपीठस्य योग्यः इति विचिन्त्य, एकास्मिन् शुभमुहूर्ते सन्यासाश्रमम् अददत्। तदारभ्य लक्ष्मीनारायणाचार्यः प्रपञ्चस्य कृते ''श्रीपादराय'' रूपेण परिचयः अभवत्।

ततः श्रीपादरायाः अनवरततया सुधावेदान्तादि ग्रन्थान्, पाठप्रवचनादिकं कुर्वन्तः, उपास्थमूर्ति श्रीरङ्गविट्ठलमूर्तिं पूजासमये, ''श्रीरङ्गविट्ठल'' इति अङ्कितपदेन सुश्राव्यतालयबद्धरूपेण कीर्तनानि गायन्तः, कर्णाटकहरिदास साहित्ये पूर्वं हरिदासाः सन्तः अपि, अयमेव आद्यः इति सुप्रसिद्धः सञ्जातः। भ्रमरगीता, गोपीगीता, मध्वनामैः सह, नवरसभरिता संख्याक भक्तिगीतानि गायन्तः, आगामि हरिदासेभ्यः मार्गदर्शको सञ्जातः।

''श्रीमद्वीरनृसिंहराजनुपते..... श्रेयसे'' इत्यादि श्लोकाधारेण एवं चरित्राधारेण ज्ञायते यत् - एकदा चन्द्रगिरेः राजा ''सालूरनरसिंहदेवः'' कारणान्तरवशात् ब्रह्महत्यापापबद्धः सञ्जातः, तदा श्रीपादराजैः स्वतपश्शक्त्या दोषनिवारणं कृतम् इति तेषां सन्मानमपि अकार्षीत्।

''विप्रहत्य दोष... इति कीर्तनेन ज्ञायते यत्'' - श्रीपादरायाः एकदा श्रीमन्न्यायसुधायाः अनुवादं अनर्गलतया, गंगाप्रवाहवत् गम्भीरकण्ठेन कुर्वन्तः आसन्, तदा उत्तरादिमठयतीश्वराः - श्रीरघुनाथतीर्थाः तेषां प्रशंसाम् अकुर्वन्। तदारभ्य श्रीपादराजाः इति नामान्तरेणापि ख्यातिम् अवाप्नुवन्। श्रीव्यासरायाः श्रीवादिराजस्वामिनः, श्रीपुरन्दरकनकहरिदासादयाः एतेषां कीर्तनानि अनुकरणं कृतवन्तः।

तैः विरचितेषु गीतेषु - ''भूषणके भूषण इदु भूषण'' इति इदं गीतं सुभाषितानि प्रबोधयति। यथा - नारायणमन्त्रं जिहवायाः, पादयोः तीर्थयात्रा, देवालयस्य तुलसीबृन्दावनं, कर्णयोः विष्णुकथा, हस्तयोः दानम्, मानवानां मानम्, नेत्रयोः श्रीरङ्गनाथमूर्तिः शिरसः नमस्कारः, कण्ठस्य तुलसीमाला च सुन्दरानि'' इति अब्रुवन्।

''हरे वैकुण्ठ शैलवल्लभ....'' इति श्रीनिवासस्य कीर्तनमपि सुप्रसिद्धम्।

एतेषां बृन्दावनं ''कोल्हापुर जनपदे मुल्बागल प्रदेशे अधुनाऽपि विद्यते।





# व्रणम् खनित्रकृतम्

तेलुगु मूलम् - श्रीनिवासादीक्षितुलु
संस्कृतानुवादः-या.उमामहेश्वररावः
चित्रम्- के. द्वारकानाथ्

चित्रकथा

पुष्पप्रियः श्रीवेङ्कटेश्वरः। किन्तु पर्वते पुष्पाणि समृद्धं नोपलभ्यन्ते। तां न्यूनतां पूरयितुं श्रीरामानुजाचार्याः विचिन्त्य स्वशिष्यान् सर्वान् अपि समाहृयन्।















भार्यया पुत्रेण च सह पवर्तस्योपरि गतः अनन्ताचार्यः। उपवनार्थं जलमावश्यकम्, अतः आदौ कूपार्थं खननमारब्धवान्। मृत्तिकायाः खनने सति तस्य गर्भवती भार्या तां मृत्तिकां निष्काभ्य बहिः क्षिपति। पुत्रोऽपि यथाशक्ति साहाय्यं करोति। तान् दृष्ट्वा श्रीस्वामिनः दयया कृपया च बालरूपेण आगत्य....






स्ववाचम् न परिपालयन् मृत्तिकां वहन्तं बालं तर्जयत्यनन्तः।




आनन्दनिलयं प्रति धावति स बालः।




अनन्ताचार्येण क्षिप्तं खनित्रं बालस्य मुखे लगितम्।




तेन रुधिरं अस्त्रवत देवालयस्य अन्तः बालः पलायितः। तस्य पृष्ठतः अनन्तोऽपि गतवान्। बालः न दृष्ट तः परन्तु पुरतः व्रणेन स्वामी वर्तते।



स्वामिन्! दोषः कृतः... मां शास्तु!

अनन्तः स्वामिश्रमश्रुस्थाने परागं लेपितवान् रुधिरस्रवः रुद्धः।

अनन्ता! एतद्व्रणं श्रीवत्सचिह्नमिति भावयिष्यामि।

अर्चकाः आगत्य स्वामिस्मश्रुस्थाने घनसारं लेपितवन्तः।

अनन्त! एतद्व्रताणं दृष्ट्वा भाविकालीनाः जनाः तव अनन्यभक्तिं प्रशंसन्ति, अभिनन्दनि

अनन्तस्य परिवारः भक्त्या स्वामिनं नमस्कृतवत्।

ॐ नमो वेङ्कटेशाय!

अग्रिमपद्त्रिकायां श्रीवेङ्कटेश्वरस्य अन्यं दिव्यलीलाविलासं ज्ञास्यामः...

स्वस्ति!!!



बालनीति

# सुवर्णनिधिः

पुरा एकस्मिन् नगरे चारुदत्तः नाम धनिका आसीत्। कालनलान्तरे विधिवशात् सः अतीव निर्धनः जातः। दारिद्र्येण अत्यन्तं दुःखितःसः प्राणत्यागं कर्तुं निश्चितवान्।

परन्तु तस्मिन् रात्रौ सः एकं स्वप्नं दृष्टवान्। स्वप्ने कश्चन क्षपणकः तेन दृष्टः। सः क्षपणकः उक्तवान् - 'भोः मणिभद्र, अहं भवतः पूर्विकैः सम्पादितः निधिः भवामि। अहं गृहम् आगन्तुम् इच्छामि। प्रातः क्षपणकरुपेण तत्र आगमिष्यामि। भवान् दण्डेन मम शिरसि ताडयतु। अहं तदा कनकमयः भविष्यामि' इति। अनन्तरं मणिभद्रः स्वापात् उत्तितवान्।







अनन्तरदिने प्रातः स्वप्नोक्तरीत्या एकः क्षपणकः गृहम् आगतवान्। चारुदत्तः दण्डेन तं



क्षपणकं शिरसि ताडितवान्। क्षपणकः कनकमयः भूत्वा भूमौ पतितवान्। चारुदत्तः सर्वं कनकं गृहस्य अन्तः नीतवान्।

अत्रान्तरे कश्चित् नापितः तत्र आगतवान्। सः प्रवृत्तं सर्वमपि दष्टवान्। एतद् ज्ञात्वा चारुदत्तः नापितं गृहस्य अन्तः आहूय - 'मित्र, अत्र इदानीं भवता यद् दृष्टं तद् अन्यत्र कुत्रापि न वक्तव्यम् इति उक्तवान्न तस्मै उपायनरुपेण किञ्चित् धनमपि दत्तवान् सः।

नापितः स्वगृहं गत्वा चिन्तितवान् - 'क्षपणकान् दण्डेन ताडयामः चेत् तेषां कनकमयत्वं सेत्स्यति इति तु निश्चितम्। अतः अहमपि तथैव करोमि' इति।

अनन्तरं प्रातः काले नापितः क्षपणकविहारं गतवान्। तत्रत्यान् सर्वान् अपि क्षपणकान् -'भवन्तः अद्य मध्याह्ने भोजनार्थं मम गृहम् आगच्छन्तु' इति प्रार्थितवान्।

क्षणपकाः तु सन्तोषेण अङ्गीकृतवन्तः। मध्याह्ने ते गृहम् आगतवन्तः। नापितः द्वारं पिधाय दण्डेन तेषां शिरसि ताडनम् आरब्धवान्। क्षपणकाः भीत्या रादितुं आरब्धवन्तः। कोलाहलं श्रुत्वा राजभटाः आगतवन्तः। ते नापितं न्यायालयं नीतवन्तः।

तत्र न्यायाधिकारी नापितं पृष्टवान् - 'किमर्थं भवान् क्षपणकान् ताडितवान्' इति। नापितः चारुदत्तरस्य गृहे दृष्टं सर्वमपि उक्तवान्। न्याथाधिकारी चारुदत्तम् आहूय तस्य मुखात् सर्वं वृत्तान्तं ज्ञातवान्। अनन्तरं दुराशापीडितं नापितं शूलम् आरोपितवान् च।





# विशिष्ट बालकः

नाम - इ.साइ यशस्वि
कक्ष्या - पञ्चम कक्ष्या
जन्म दिनम् - १८-११-२००९
पितुः नाम - इ.वेङ्कटरमेष्, इंडियन् आर्मी
मातुः नाम - डि.श्रीदेवी, ति.ति.दे.,
पाठशाला - मेक् मै बेबि जीनियस्, तिरुपति

१. वेमनशतकरत्न - ३ कक्ष्या
२. आवर्तनपट्टिकायां ११८ मूलक विषयज्ञः - ४ कक्ष्या
३. १०८ योगासना प्रवीण - ४ कक्ष्या
४. १०० गणितसंक्याः क्षणिक गणिकोत्तमः - ४ कक्ष्या
५. शताधिकम् ओरिगामि आश्चर्य बालकः - ४ कक्ष्या
६. टान्ग्राम् आश्चर्य बालकः - ४ कक्ष्या
७. जीनियस् बुक् आफ् रिकार्डस्

१०० वेमनपद्यानि - १०० बालबालिकाः - २५ निमेषाः - १-६-२०१६
१०० वेमनपद्यानि - २०० बालबालकिाः - २५ निमेषाः - ५-६-२०१७
१०० वेमनपद्यानि - ३०० बालबालकिाः - २५ निमेषाः - ३-६-२०१८

८. वण्डर् बुक् आफ् रिकार्डस्

१०० वेमनपद्यानि - ३०० बालबालिकाः - ३-६-२०१८
१. रूभिक्यूभ् २.जगिकिंग् बाल्स् ३. मैक्रो आर्ट् ४ चित्रलेखनं ५. स्केटिंग् ६.भगवद्गीता ७. विष्णुसहस्रनामावळि ८. गोविन्दनामावळि ९.लिंगाष्टकम् १०.ब्रीत्लेस् सांग्



# क्विज्

संस्कृतानुवादः
- एन्. नागेश्वररावः

१. सीतायाः पतिः कः?

अ. दशरथः आ. सुग्रीवः
इ. श्रीरामः ई. जम्बवान्

२. दशरथस्य कति भार्याः?

अ.३ आ.५
इ. ४ ई.२

३. रामस्य कृते कति वर्षाणि वनवासम् अभवत्?

अ. २० आ. १२
इ. १३ ई. १४

४. दशरथः कस्य सपर्यां करोति?

अ. विश्वामित्रस्य आ.भारद्वाजस्य
इ. वशिष्टः ई. वाल्मीकेः

५. शूर्पणखायाः नासिकाच्छेदनं कः अकरोत्?

अ. रामः आ. लक्ष्मणः
इ. सीता ई. अन्यः

६. सीतायाः अपहरणं कः अकरोत्?

अ. रावणः आ. मारीचः
इ. मेघनादः ई. अन्यः

७.रामेण सह वनं कौ गतौ?

अ.भरत - लक्ष्मणौ आ.लक्ष्मण - सीते
इ. भरत - सीते ई. लक्ष्मण - शत्रुघ्नौ

समाधानः १.इ २.अ ३.ई ४.अ ५.आ ६.अ ७.आ

# चित्रलेखनम्

अस्य चित्रपटस्य रञ्जितं कुरुत वा



उपरि चित्रपटस्य अधो निर्दिष्ट प्रदेशे स्थापयामेव



